कुरु सुवर्णम्। जगत् स्वर्गायताम्। मरुभूमिश्च नन्दनायताम्। नृपकन्या नृप-सहधर्मिणी त्वं निखिलविश्वस्य शाश्वताध्यात्मराज्ञी भव।

मीरा। गुरुदेव! भवत आशीर्मम शिरसि पुष्पासारैर्वर्षतु। जन्म मम सार्थकं भवतु। देवदेव! त्वदाशीर्बलेन मम पुरत एव मम पतिं गिरिधारिणं पश्यामि।

रायदासः। मातः! तव शाश्वतपतिमुद्दिश्य नामकीर्तनं कुरु।

मीरा। (गायति)

महाराज! मम कृपापारावार!
मा कुरु मां विरहानलदग्धां
दयस्व मयि दयासार॥ ५३॥
वारि विना पङ्केरुहं चन्द्रहीना रात्रिः।
त्वां विना तथा मम परा दुःखार्तिः।
विरहदावज्वाला-दग्धपञ्जराकुला
मीरा तव त्यक्ताहारा विश्वसारात्सार॥ ५४॥
नन्दनन्दन स्वामिन् धृतगिरिभार।
गिरिधर सुधासारात्सार!
शोकविदग्धां सौख्यस्निग्धां
विधेहि मामनुकम्पासार॥ ५५॥
नास्ति मम बलमखल त्यज च्छल-
मुदेतु भगवन्महिमाऽपारः।
त्वमसि गुणिमणिरहमगुण-खनि-
र्दयस्व दयित मम मौक्तिकहार॥ ५६॥
मानं पालय लज्जां कालय
भवदनुगायाः सारात्सार!
त्यक्ताहारां मुक्तविहारां
कुरु मां चरणे करुणाधार॥ ५७॥
नियतं दीनो जलमिव मीनो
घनमिव चातक इष्टासारः।
याचे त्वामहमुज्ज्वलविग्रह-
मङ्गच्छवि-जित-कान्त-मसार॥ ५८॥

रायदासः। तव सङ्गीत-माधुर्यं पायं पायं लब्धापरिसीमानन्दोऽहं नित्यशुद्धबुद्धमुक्तसच्चिदानन्दसकाशे प्रार्थये—

देवस्ते दुःखशोकानपनयतु हृदः प्रापितान् बन्धुवर्गैः
सिच्याद्दुच्चावचत्वं गतमतिकरुणो रूढ-वैराग्य-बीजम्।
निष्ठामाप्ता स्वयं त्वं हरिभजनविधौ त्वादृशीरन्यनारीः
कुर्या अध्यात्मविद्याध्ययनविगलिताशेषसंसारभाराः॥ ५६॥

असौ देवदेवस्तव प्राणनाथो न केवलं तवैव दुःखराशिं विदूरीकरिष्यति, परन्तु विश्वार्तिराशीनपि चिराय निराकरिष्यति, मातृजातेर्वदनमण्डलञ्च चिराय त्वन्माध्यमेन मधुस्मितविमण्डितं करिष्यति च।

मीरा। गुरुदेव! त्वदाशिषा धन्यास्मि। प्रभुर्मम विजयताम्।

रायदासः। वत्से! त्वमसि अर्चनाराधनोपासना-प्रार्थनाविग्रहधारिणी। देवार्चनसमये विधिक्रमेण क्रियन्ते सप्त कृत्यानि। तद्यथा दीपज्वालनं, धूपदानं, पुष्पाञ्जलिप्रदानं, शङ्खवादनं, घण्टास्वननं, चामरव्यजनं, नैवेद्य-निवेदनं च।

तत्र, तव जीवनस्य समग्रभक्तिरसं समाकृष्यात्मानं ज्वालयित्वा त्वं राजसे दीपरूपा।

स्वजीवन-समग्रज्ञानराशिमाहृत्य आत्मानं धूपीकृतवती त्वम्।

मीरा। देव! भवतां स्नेहो मां सर्वमङ्गलकृत्येषु प्रोद्युक्तां प्रोद्बुद्धां च करोतु।

रायदासः। स्वजीवन-प्रेमोद्यानपुष्पराशिं समाहृत्य श्रेष्ठपुष्पाञ्जलि-र्देवार्चनाया असि।

सङ्गीतझङ्कारेण समग्रजीवनं झंकारमयं कुर्वती शङ्खस्वरूपिणी च मातः सत्यमसि त्वम्।

समग्रजीवन-वाणीराशिमुच्चैः समुद्घोष्य आत्मानं घण्टारूपेण च वादयसि त्वम्।

शीतलता-कोमलता-गुणगुच्छ-समाहारेण आत्मानं चामरीकृतवत्यसि त्वम्।

समग्रजीवन-गुणशक्ति-सौन्दर्यमाधुर्यैश्वर्यराशिं समाकलय्य स्वयं नैवेद्यं भूत्वा राजसे त्वं देवार्चने।

सत्यं देवि ! मूर्तिमती देवपूजा त्वं स्वयमेव ।

मीरा । इयं स्नेहप्रसूतोक्तिर्भवताम् । केवलं दीनहीना श्रीकृष्णदासानुदासदासी खल्वहम् ।

रायदासः । श्रीकृष्णस्य एकान्तदास्येव महाराज्ञी । शृणु मातः ! ततोऽसि त्वं नित्यसिद्धा, नित्यमुक्ता, नित्यपूर्णा च । नास्ते प्रयोजनं तत्त्वतस्तव दीक्षायाः । तथापि पूतहोमाग्नि-प्रज्वलनपूर्वकं भगवच्छ्रीकृष्णादेशात्त्वां लौकिकरीत्या करिष्ये दीक्षिताम् ।

मीरा । धन्यास्मि ।

रायदासः । ( अग्निं प्रज्वल्य ) [ सङ्गीतम् ]

दैन्यनिवारण विघ्नविनाशन सुखविकाशन एहि रे ।
संसारतारण विमोक्षकारण मरणवारण पाहि रे ।
भवभयभञ्जन कालियगञ्जन नित्यनिरञ्जन एहि रे ।
विश्ववाञ्छन शिखालाञ्छन शोकसान्त्वन पाहि रे ॥ ६० ॥

( उभौ प्रणमतोऽग्निम् । )

रायदासः । मन्त्रं गृहाण । ( कर्णे मन्त्रं कथयति । )

मीरा । कृतार्थाऽस्मि । गुरुदेव ! कोटिशः प्रणामान् विज्ञापयामि ।

समाप्तश्चतुर्थोऽङ्कः ।

## पञ्चमोऽङ्कः

### भोजराजस्य पश्चात्तापः

( प्रविशति भोजराजः )

भोजराजः । ( दीर्घं निःश्वस्य ) हन्त भोः

भगवति दृढभक्तिर्या हि वृन्दावनेन्दौ
कलुषित-जनजुष्टा वृत्तिरस्याः कथं स्यात् ।
नरपतिपद-दम्भान् नैतदालोचितं प्राक्
परिणमति फलं तन्मूर्खताया ममैतत् ॥ ६१ ॥

अहो शून्येयं विशालपुरी। मम प्राणाभ्यधिका मीरा गभीरदुःखेन त्यक्तवती पुरीमिमाम्। पुनस्तत्र मिथ्यासन्देहपरायणोऽहं तस्या गृहत्याग-कारणमस्मि इति अनुतापानलो मां दहत्यनिशम् अन्तर्ज्वालम्। किं नु मया करणीयम्? को वाऽत्र प्रतीकारः?

किं राज्यं वनिताविनाकृतमिदं त्यक्त्वा श्रयिष्ये वनं?
प्राणान् वा महिषी-वियोगविधुरान् नेष्यामि शेषां दशाम्?
विश्वासप्रवणां मयि प्रणयिनीं निर्वासयन् कामिनीं
गन्ता रौरवनारकं ध्रुवमहं हे देव मां तारय॥ ६२॥

(इति रोदिति।)

अहो पादशब्द इव श्रूयते।

(ततः प्रविशतो राजमाता भ्राता विक्रमदेवश्च)

**विक्रमदेवः।** अग्रज! कथमुन्मना इव लक्ष्यसे राजकर्मपरिचालन-व्यापारे मनो न निधीयते चेत् सर्वं ध्वंसं यास्यति।

एका गता यदि ततो विमनायसे किं
पत्नी पुनस्तव परा धरणीयमास्ते।
भूपा यशस्विपदवीं समुपागताः प्राक्
सेवां विधाय धरणेर्न तु हा रमण्याः॥ ६३॥

अपि च—

द्विभार्या राजानः प्रथित इति वादः पृथुतया
तयोर्ज्येष्ठां पृथ्वीं कथयति कनिष्ठां तु रमणीम्।
सुदुष्प्रापा पृथ्वी न पुनरितरेति प्रतिभया
सतीं सीतां त्यक्त्वा धरणिमपुषद् रावणरिपुः॥ ६४॥

**राजमाता।** वत्स! दुर्मनायमानो मा भव। न त्वद्वदन-कमल-दर्शने समर्थाऽस्मि। किं वा घटितम्?

**भोजराजः।** मातः! सर्वं ज्ञातं भवत्या। यदा प्रभृति तव वधूमाता राजपुरीं त्यक्तवती, तदा प्रभृति जगदिदं मम श्वापदसङ्कुलं गहनारण्यमिव

प्रतिभाति। यदि सा स्वेच्छातोऽगमिष्यत्, तत् सहनीयमभविष्यत्। किन्तु वाक्यवाण-जर्जरिता सा प्राणत्यागायानुरुद्धा मया। अहो मे चित्तज्वाला श्मशानानलज्वालातोऽपि भयङ्करी।

माता। अहो!

त्वं दूयसे किमिति दार-विनाशहेतोः
स्वाभाविकी गतिरियं भविनां भवेऽस्मिन्।
पत्न्या वियोगविधुरस्य कथाऽस्तु दूरे
दोषाय नो बहुपरिग्रहताऽपि राज्ञः॥ ६५॥

एषा नु स्वाभाविकी गतिः। राजा न शोभते महिषीं विना। ततो नु श्रीरामचन्द्रेणापि सीता-प्रतिकृतिः कृता बभूव। वत्स! त्वयाऽवश्यमेव दारान्तरं ग्रहणीयम्। राज्ञः सत्पात्रप्रभावः कथं भवेत्? का नाम राजकन्या तवाभिप्रेता?

विक्रमदेवः। अग्रज! अनुजेन मया न भवान् उपदेष्टव्यः। केवलं ब्रवीमि जनन्या उपदेशो भवता परिपालनीय एव। (सक्रोधम्) का नाम स्पर्धा तस्या दीनाया हीनायाश्च नार्याः? क्षुद्रराजन्यकस्य कन्या सा अस्मन्महाकुलमानीता हीनतां त्यक्तुं न समर्था—परन्तु गर्वान्विता यथा तथा वा करोतु कथं तदस्माभिः सहनीयम्? वादसमये पतिः पत्नीं गृहत्यागाय आदिशति ध्रुवम्; किन्तु का नाम पत्नी तदादेशमनुपालयति?

संप्राप्ते कलहे निरर्गल-गलौ जायापती स्तो यदा
का वा वाग्रुषती निरेति न मुखात् कोपात्तदानीं तयोः।
का सा मानधना तथेति वचनं स्वीकुर्वती स्वामिनः
संकल्पं मरणाय या प्रकुरुते पत्नीं विना तावकीम्॥ ६६॥

ततो मातुरुपदेश एव वरणीयतम इति ध्रुवमेव। इयं कुलत्यागिनी विधर्मिणामपि लोभन-कारणमिति ततः कथं चेतो भवतो दूयते?

**भोजराजः।** भ्रातः ! एषा धारणा अन्यायेन पोषिताऽस्माभिरिति मह्यं साम्प्रतं प्रतिभाति। भगद्भक्तायास्तस्याः पुनः का नाम जातिः ? पङ्कजिनी सा पङ्कस्य वहूर्ध्वें राजते।

**विक्रमदेवः।** नाहं विषयेऽस्मिन् विश्वसिमि। कृष्णध्यानादि-विषयेष्वपि सा छलमाश्रयतीति नास्ति तत्र सन्देहः। तस्या गाणश्रवणमात्रं श्रीकृष्णो गोलोकं त्यक्त्वाऽधो भूतले निमेषादवतरति इति तस्या गर्वोऽहेतुक एव।

निर्बीजेन निरन्तरेण तपसा संशोषयन्तस्तनुं
योगीन्द्रा न भवन्ति हन्त सकृदप्यालोकितुं यं क्षमाः।
एषा तं नव-तापसी पतिसुहृद्द्वेषव्रते दीक्षिता
प्रत्यक्षीकुरुते सदेति वदतां धिग्धिङ्मृषा-भाषिताम्॥ ६७॥

**माता।** विक्रमदेव ! धैर्यमवलम्बस्व। किन्तु वत्स भोज ! अपि प्रस्तावो मम त्वयाऽनुमोद्यते ?

**भोजराजः।** मातः, अतुलनः सदा मातृस्नेहः। किन्तु पुनर्विवाहो मया न कदापि स्वीकरणीयः। दोषहीनायास्तस्यास्त्यजनेन जीवनं मम सर्वथा जातमधन्यम्। पुनस्तद्धेतुकानि एव राज्यस्याशान्त्यादीनीति मे गभीरो विश्वासः। मीरां विहाय नाहं कदाचनान्यां कामपि पत्नीरूपेण स्वीकरिष्यामि। अहो ! निर्दोषसीतासमा विसर्जिता साऽद्यापि प्राणान् धारयति वा न वेति को जानाति ?

**माता।** अहो धिगधन्यां माम्। अनेन प्रकारेण मज्ज्येष्ठपुत्रजीवनमति-वाहितं भविष्यतीत्यसहनीयमेतत, इतः सन्न्यासिनां जीवनं शतशो वरम्। यतस्तत्र नास्ति ध्रुवं स्मृतिवृश्चिकदंशनज्वाला।

**भोजराजः।** मातः क्षमस्व माम् अबोधं सन्तानाधमम्। किन्तु मातः ! मद्धलवदिच्छां भवत्याः सकाशे निवेदयितुं वाञ्छामि।

**माता।** निश्चितं तदकपटं ब्रूहि।

**भोजराजः।** श्रूयते सा किल—

मयाऽनुशिष्टा मरणाय कोपिना
गृहं परित्यज्य रुषाऽभिमानिनी।
समेत्य वृन्दावनधाम वन्दितं
हरेरुपास्ते चरणौ समाधिना ॥ ६८ ॥

अपि च—

गायन्त्याः किल तत्र तद्गतधिया प्रौढं यशः श्रीहरे-
र्देवः सन्निधिमञ्चति प्रतिदिनं तद्गान-शुश्रूषया।
विश्वं विस्मरतीव गानसमये गानावसाने पुनः
प्रत्यक्षीभवतेव सा भगवता प्रस्तौति वाचं मुहुः ॥ ६९ ॥

कथाव्यपदेशेन सैकदा मामकथयत् यत् सा वृन्दावने स्थातुमैच्छदिति। यद्यद्यापि प्राणावशेषं सा तिष्ठेत्तर्हि तत्रैव वर्तेत। मातः! श्रीवृन्दावनधामतो राज्यलक्ष्मीमहं स्वीयान्तःपुरमानेतुमभिलषामि।

**विक्रमः।** (सक्रोधं स्वगतम्) अहो पत्नीप्रेमोन्माद एष राजा सर्वं कर्तुं शक्नोति। किं करोमि?

(राजानमुद्दिश्य) भवान् राजा, पुनश्चाग्रजः। तथापि विवेकप्रेरितो वदामि न तस्या वदनमप्यस्माभिरन्तःपुरेऽस्मिन् दर्शनीयम्। अथवाऽविचारणीयं न खलु राजचरितं प्रजाभिः। प्रजापुञ्जो वा किं चिन्तयिष्यति विषयेऽस्मिन्?

**भोजराजः।** विक्रमदेव! प्रजानां भावना ममैव, न तव।

**विक्रमः।** तस्मात् स्थानत्याग एव मयाश्रयणीयः।

(सक्रोधं बहिर्गच्छति।)

**भोजराजः।** मातः! प्रार्थये खलु तवानुमतिं राजलक्ष्म्याः पुनरानयनाय।

**राजमाता।** वत्स! मातुः सुखं पुत्रसुखमेव। पुनश्च त्वं राज्यशासकः। त्वयि च निवसति मम मेवार-राज्यलक्ष्मीः। त्वन्मतेन यदि साऽऽनेतव्या, तत्तथा विधेहि।

भोजराजः। मातः! अतुलनीयः खलु स्नेहस्तव सन्तानं प्रति। राजवेशं परित्यज्य निष्किञ्चन-सन्न्यासिवेशेन यामि वृन्दावनम्। यस्य धूलिकणा अपि पवित्रतमाः। पुलकावेशाद् रोमाञ्चमवाप्नोति मम शरीरम्। अहो मम भाग्यस्य परा काष्ठा—

मुकुन्द-पादाब्ज-परागपूतं
मुकुन्द-बाहूद्धृत-गण्डशैलम्।
मुकुन्द-नामाङ्कित-वृक्षपत्रं
मुकुन्द-वृन्दावनमाश्रयिष्ये॥ ७०॥

मातर्देह्याशीर्वादान्। मातर्जयस्तव जयः।

माता। पुत्र! जयस्व। श्रीभगवांस्त्वां सर्वदाऽवतु।

(उभौ निष्क्रान्तौ)

(समाप्तः पञ्चमोऽङ्कः)

# षष्ठोऽङ्कः

[ सन्न्यासिवेशधरस्य भोजराजस्य वृन्दावनागमनम्। ]

भोजराजः। अहो मे मूर्खताया निःसीमता!

कार्याकार्य-विवेकबोध-विधुरो योऽहं पर-प्रत्ययात्
पातिव्रत्य-महीयसीं गुणवतीं पर्यत्यजं प्रेयसीम्।
सा दृष्टा न तथापि मह्यमिति मे संप्रत्ययो नान्यथा
स्यान्मे दुष्कृतिनो महात्मसुलभं वृन्दावनालोकनम्॥ ७१॥

वृन्दावनञ्च—

एतद्देव-विलास-भूमिरवनौ स्वर्गात् परस्तादिदम्
आलोकश्चिरमत्र सर्पति हरेरानन्दधारा परा।
लीलाभूमिरियं शिशोर्भगवतो वत्सादि-दैत्यद्विषो
वन्दे निन्दित-नन्दनं वनमिदं वृन्दावनाख्यं मुदा॥ ७२॥

किञ्च—

अत्रैव धत्ते सुतरां विकाशं
देवस्य सौन्दर्यमनन्त-शक्तिः।
माधुर्यमैश्वर्यमगाधबोधः
सर्वज्ञता चेति षडङ्ग-सम्पत्॥ ७३॥

सत्यं महामूर्खः खल्वासम्। अन्यथा कथं महामहिममयीं सहधर्मिणीं परमुखवचः श्रवणात् क्रोधापन्नोऽहं तिरस्कृतवान्। तथापि पत्न्याः पुण्यमेव पत्युः पुण्यमिति हेतोर्देव्याः पुण्यफलेनैवात्रागतोऽस्मि वृन्दावनधाम्नि। श्रीलश्रीभगवतः अनन्तालोकः असीमानन्दः अवारितममृतं च चिरमत्र लसन्ति। अदूरे प्रवहति च भगवत्पादरजो नित्यवक्षोधारण-धन्या यमुना।

( प्रविशति यमुनां स्तुवन् भक्तगायकः )

भक्तगायकः।

मधुवनभूषण-गोकुलतोषण-मोचनकारण-देवनुते
मुनिगणतर्पण-कालियरक्षण-माधवराधन-भानुसुते।
जगदघनाशन-वृन्दावनधन-गङ्गासुमिलन-नन्दयुते
जय यमुने जय हृतधरणीभय धृतमणिसंचय-गुणपूते ॥ ७६ ॥
कलकलहासिनि नूपुरणादिनि जनगणतारिणि धन्यकृते
नटवरनाटित-नर्तनविलसित-तरङ्गदोलित-पुण्यस्मृते।
कलिन्दनन्दिनि शिखरिशिरोमणि-गिरिवरशोभिनि शान्तिभृते
जय यमुने जय नन्दतनयमय-नीलकमलचय-कान्तिवृते ॥७७॥

( निष्क्रान्तः )

भोजराजः। अहो श्रीयमुनास्तुति-श्रवणमात्र-प्रीतः श्रीभगवान् मम मीरामित एव प्रेषयति।

अपूर्वं तपसस्तेजो निगृह्यार्क-कलाधरौ।
देदीप्यते धराधाम्नि वक्षःपञ्जरपिण्डितम् ॥ ७४ ॥

सत्यमतुलनीया खलु मम मीरा। रत्नपरीक्षा-निष्णाता च मम जननी येमां स्वराज्यं नेतुं समादिष्टवती। निश्चितं जननीपुण्यं पावयति पितृकुलं, दवयति च पुत्रपापचयम्। ( निपुणं वीक्ष्य ) धन्या मम सहधर्मिणी—

चरित-गुरु-तपस्या-लीन-लावण्यधारा-
प्यसुलभ-तनुतेजः-क्षालिताशा-तमिस्रा।
गृहपति-निगृहीता प्रच्युता क्षुद्र-गेहाद्
भुवनपति-गृहीता वेश्म विश्वं विधत्ते ॥ ७५ ॥

( मीरा प्रविशति गायन्ती )

मीरा । कृष्ण केशव कृष्ण केशव कृष्ण केशव पाहि माम्
राम राघव राम राघव राम राघव पाहि माम् ॥ ७८ ॥

सखे मम भो प्रेम मारकं
न जानाति कोऽपि मम वेदनम् ।
शूलोपरि शय्या मामकी
कथं करोमि तत्र शयनम् ? ७९ ॥
गगनमण्डलोपरि शय्या प्रियस्य मे
कथं लभेय तस्य दर्शनम् ?
आर्तस्य गतिं जानात्यार्तो जनः
सोऽथवा यः करोति घातनम् ।
रात्निकस्य गतिं जानाति रात्निक-जनो
यो वा रत्नस्य करोति रक्षणम् ॥ ८० ॥
वेदनार्ताऽहं भ्रमामि वनाद्वनं
पश्यामि नाहं कमपि वैद्यजनम् ।
मीरा प्रिय-प्रभुधना भवेद् बीतवेदना
प्रियः करोति यद्यारोग्य-विधानम् ॥ ८१ ॥

भोजराजः । अहो सुमधुरं स्तवनं श्रीमीरायाः । अहो ! अश्रुतपूर्वं सङ्गीतम् । सत्यं श्रीमीरायास्तुलनं केवलं सैका एव । सङ्गीतमिदम् अतिक्रम्य मर्त्यसीमानं संस्पृशति ध्रुवं देवदेवपादपद्मयुगलम् । ( मीराम् उद्दिश्य ) नमो देव्यै ।

श्रीमीरा । भक्तवर ! भवते नमः । कृतार्थाऽस्मि भक्तदर्शनेन ।

भोजराजः । देवि ! अहमेवास्मि कृतार्थः । किन्तु किंनामकं धनं भवत्या अत्र प्राप्तम् ?

श्रीमीरा। श्रीरामरूपी श्रीकृष्णो मयाऽत्र लब्धः। सङ्गीतमुखेन ददाम्युत्तरम्।

सुखं हि राम-गोविन्दनाम-कथं रे
काच-प्रस्तर-हीरे समसारे।
कथं भेदविवेचनं रे ?
हीरकस्य ध्रुवं तत् प्रमाणं
समधिक-मूल्यविक्रयणं रे ॥ ८२ ॥

कोकिल-काकौ समाकृतिकौ
कथं कोकिल-गणनं रे।
कोकिलस्य ध्रुवं तत् प्रमाणं
सुमिष्टमस्य कूजनं रे ॥ ८३ ॥

हंस-सारसौ सुसदृशौ
कथं हंसस्य गणनं रे।
हंसस्य ध्रुवं तत् प्रमाणं
चुङ् चुङ् मुक्ताखादनं रे ॥ ८४ ॥

समदर्शनौ गृहि-मुनिजनौ
कथं भक्त-निर्धारणं रे।
भक्तस्य ध्रुवं तत् प्रमाणं
सर्वेषां वचःसहनं रे ॥ ८५ ॥

मीरा-पर-प्रभु-गिरिधर-नागर-
हरिचरणयोः स्मरणं रे।
द्वारकालीलाकर चरणशरणपर-
जीवनं कुरु धन्यं रे ॥ ८६ ॥

भोजराजः। श्रीवृन्दावनधाम्नि श्रीगोविन्दनाम-भिन्नं श्रीरामनामोच्चारणं कथं क्रियते ?

गोविन्दलीला-विलसद्वनान्ते
गोविन्दधामेति चिरप्रसिद्धे ।
वृन्दावने भक्तशिरोमणे त्वं
रामस्य किं कीर्तयसीह नाम ॥ ८७ ॥

मीरा। राम-गोविन्दयोः को भेदः ? घननील-नलिनाभ-त्रेतायुगीय-लीलाधुरन्धर-श्रीरामचन्द्रेण सह घन-कृष्णाभघनप्रभ-यमुनातट-विहारिणः श्रीकृष्णचन्द्रस्य को भेदः ? केवलं युगान्तरे भिन्न-नाम-धारणम्। अहो को नु मधुरं गायति ।

( प्रविशति भक्तगायको गायन् )

त्रेतायुगजनि-दिनकरकुलमणिरायोधनहत-राक्षसराजः
द्वापरशेषे यमुनोद्देशे स एव विदितो नन्दतनूजः ॥ ८६ ॥

रघुवरवनिता सा खलु सीता राधा पूजित-गोपान्वयजा ।
कृष्ण-रघूतम-गौर-गौतम-चालनकर्त्र्यपि सैवावनिजा ॥ ६० ॥

श्रीलहनूमत्-प्रमुखा यावत्-सखिनिकुरस्वास्त्रेतायुगजाः ।
ते हि सुदाम-प्रभृति-श्याम-प्रणयिप्राया वृन्दावनजाः ॥ ६१ ॥

उत्तरकोशल-देशं श्यामलशस्यं कुरुते सरयूर्वत या ।
सैव हि यमुना सारसमिथुनान्दोलित-सलिला वृन्दावनजा ॥६२॥

सर्वभुवननुत-पार्षदगणवृत-लौकिकलीलालोकन-सज्जा ।
भ्रमामि धरणौ दिवसे रजनौ काङ्क्षित-राधारमण-पदाब्जा ॥ ६३ ॥

( भक्तगायको निर्गतः । )

भोजराजः। धन्यधन्योऽस्मि। देवि ! तस्य महाधनस्य किञ्चित् केवलं प्रार्थये ।

मीरा। तदर्थं तत्सकाश एव प्रार्थना कार्या।

भोजराजः। अपि भवत्याः सकाशे किञ्चित् प्रार्थितं प्राप्तुमर्हामि न वा?

मीरा। किन्तु तीर्थपर्यटनपरया भिक्षामात्रजीविन्या किं वा मया देयं स्यात्?

भोजराजः। तवावस्थोचितं भद्रे देहि किञ्चित् तथापि मे।
यत्किञ्चिदपि दत्त्वाऽर्थी तोषणीयः सदा नृभिः ॥६४॥

मीरा। निश्चितम्।

भोजराजः। (छद्मवेशं परित्यज्य) देवि! अहं तवाधमपतिः भोजः केवलं त्वद्दुःख-दानदक्षः स्वकृतकर्मानुशोचन-विह्वलो राज्येश्वरीं स्वराज्ये नेतुं समागतोऽस्मि। महादेवि! मा मदनुरोधमुपेक्षस्व, स्वाभिप्रेतं जीवनं मेवार-मण्डले स्थित्वैव यापय, न काचन साधनबाधा तत्र तव भविष्यति इत्यहं प्रतिजाने।

मीरा। देव! पातिव्रत्यं भारतीय-नारीणां श्रेष्ठं गौरवं, तदेव प्रथमं व्रतम्। यदि महाराजो मम मेवारं प्रति गमनं स्वयं वाञ्छति, ध्रुवमहं तत् करिष्ये। तद् गिरिधरस्य मयानुमतिरवश्यमेव नेया।

(क्षणं मौनेन स्थित्वा मौनभञ्जनेन) यद्यपि नैतद् भविष्य-सुखाय मम भविष्यति, तथापि भवदिच्छानुसारं स्वराज्यमहं प्रतिगमिष्यामि।

महाराज! भवतः को दोषः? यतो भवान् निरानन्द इव प्रतिभाति? यस्य देशस्य समुदाचारो जहरव्रतं तस्य देशस्य कन्यकाऽहं क्षुद्रात्मसुखाय कथं प्राणान् तृणवन् न परिगणयिष्ये।

भोजराजः। अहो अतुलनीया खलु भारतीय-मातृजातिः।

(उभौ निष्क्रान्तौ)

समाप्तः षष्ठोऽङ्कः

# सप्तमोऽङ्कः

स्थानं—मेवार-राज-प्रासादे श्रीमीरा-कक्षम्।

कालः रात्रिः।

[ ध्यानमग्ना मीरा, भक्ता राजानुचरश्च ]

( मीरा ध्यानान्ते गायति )

मनोमोहन-मुरलीधारी
मधुमयवदन-मदिर-लोचन-मनसिजजयकारी
मञ्जुल-मञ्जीर-शिञ्जन-गुञ्जित-कुञ्जपुञ्ज-विहारी।
चरणारविन्द-मधुनिष्यन्द-मन्थरान्तरचारी॥
भज श्रीकृष्णं वद श्रीकृष्णं कुरु श्रीकृष्ण-नाम रे।
यो जनः श्रीकृष्ण-सेवी स हि मम प्राणो रे॥

[ अन्यतः प्रविशति राजानुचरः। ]

**राजानुचरः।** अहो पतितोऽस्मि नु उभयसङ्कट-शृङ्गाभ्यन्तरे। स्थले व्याघ्रो जले तथा कुम्भीरः। एकतो दुर्लङ्घ्यो राजादेशः, अन्यतश्च सममलङ्घ्यात्मविवेकवाणी। एकतो मम मृत्युदण्डोऽनिवार्यः, अन्यतश्चानन्त-नरकवासः, किं ततो मया करणीयम्।

किं शासनं नरपतेरतिलङ्घ्य लप्स्ये
तत्कोपसम्भवमहं मरणं सुघोरम्।
किं वाऽनवद्यचरितां रमणीं निहत्य
साकं स्वपूर्वपुरुषैर्नरकं प्रपत्स्ये॥

यथा तथा वा भवतु—साम्प्रतमिहलोक-निवासी ऐहलौकिकं हितमेव चिन्तयेयम्।

अहो भीषणकर्मकृन्नु एष राजभ्राता विक्रमदेवो यो भोजदेवस्य देहपातादनन्तरम् अत्याचार-कोटिजर्जरितां करोति स्वीयाग्रज-जायाम्। पुनरद्य विषपूर्ण-भाण्डं तस्याः प्राणहरणाय मद्द्वारा संप्रेषितम्। एतद् गरलं निमेषादेव प्राणान् हरति। राजादेशो मया पालनीय इति कृत्वा श्रीमीरादेवीम् अहं कालकूटगरलं पाययिष्ये। पापं सर्वं राज्ञो भवतु, न मम—पराधीनत्वात्। ( प्राग्रेसरीभूय ) मातः! प्रणामः।

श्रीमीरा। शुभमस्तु। कस्त्वम्? कथं गभीरनिशीथे रहसि समागतः

राजानुचरः। महाराज-विक्रमदेव-प्रेरितोऽनुचरोऽहमस्मि।

मीरा। वत्स! को नु संवादो महाराजेन प्रेषितः?

राजानुचरः। मातः न कश्चन मम दोषो भवत्या ग्राह्यः—यत आज्ञावहो दासोऽहम्।

मीरा। कस्ते दोषः स्यात्? राजादेशस्त्वया विज्ञापनीय एव।

राजानुचरः। (सावेगम्) मातः! भाण्डमेतद्राज्ञा भवदर्थं प्रेषितम्। ( मीरायाः करे दीयते )।

मीरा। भाण्डे किमास्ते?

राजानुचरः। मातः! मातः निगूढः खलु राजाभिलाषः। नाहमस्मि प्रष्टव्यः। ( क्रन्दति )

मीरा। वत्स! मा पर्याकुलो भव। कस्ते दोषः? निर्भयं ब्रूहि—किमत्रास्ते इति।

राजानुचरः। ( उच्चैः ) गरलं, कालकूटं तीव्रातितीव्रम्।

भक्ता। ( उच्चैः ) मातः! मातः! दूरे क्षेपणीयमेतद् भाण्डम्। अहो गरलं भीषणम्। स्पर्शेनाप्यस्य प्राणसंशयो जायेत। भाण्डं तन्मह्यं देयम्। ( ग्रहणायोद्यता )

मीरा। (तां निवार्य) वत्से! मा भवोद्वेगातुरा। नास्ते किमपि भयकारणम्। (राजानुचरं प्रति)

वत्स! मद्वचनाद्राजा विज्ञापनीयः अहमपि तस्य प्रजामण्डल्या एका। ततो राजादेशो मयाऽपि पालनीयः। निश्चितं विषपानमहमधुनैव करिष्ये।

राजानुचरः। (सोद्वेगम्) विरम देवि, राजसकाशे अचिरादेव पुनर्गमिष्यामि। भवितव्यं भविष्यति।

भक्ताः। कृपया विरम, मातः! विरम। तव जीवन-नाशेन वयमपि मरिष्यामः।

मीरा। (सुस्थिरा) युष्माकं स्नेहः अतुलनीयः। किन्तु जीवनदायको जीवनापहारकोऽपि भवेत्। अत्रापरः किं कुर्यात्? भगवदिच्छा सर्वथा बलीयसी। (गरलं त्वरितं पिबति)।

(ध्यानस्था) अयि मम परमप्रिय! विजयतां तव इच्छा। मधुर-मुरलीधर नूपुरध्वनिमनोहर प्रोज्ज्वलयन् विभया मम दीन-कुटीरं तथा च दिगन्तान् सत्यं नु त्वमागतोऽसि! अयि दीनजनशरण अधमतारण पतितपावन, अकुतोभया ततोऽहमस्मि।

राजानुचरः। (सविस्मयम्) अहो! परमाद्भुतोऽयं व्यापारः। न केवलं मीरा माता न मृता, परन्तु समग्र-शरीरमस्या विच्छुरति काञ्चन भागवतीं द्युतिम्, निःसारयत्यतुलनीय-पारिजातसौरभं, क्षरतीवाकल्पनीयाऽमृतधाराम्।

अहो अतुलनीयम् अत्याश्चर्यं खल्वेतद्दृश्यम्। जयो मातुः श्रीमीरायाः जयः।

मीरा। जयो गिरिधारि-गोपाल-नन्दनन्दनस्य जयः।

सप्तमोऽङ्कः समाप्तः

# अष्टमोऽङ्कः

(श्रीमीराया मेवारत्यागः।)

स्थानं—मिवार-राजान्तःपुरम्

(प्रविशति श्रीमीरा)

श्रीमीरा। (रुदती) गिरिधारिन् प्रभो! केवलं निरीक्षा परीक्षा च, एतयोः किमवसानं नास्ति। त्वदादेशान् महाराजेन सह मिवारे पुनरागत्य मया किं किं न सोढम्? मम केवलं स्मरण-मनन-कष्टं, तव तु नाथ यातायातैरपि अशेष-कष्टम्।

(गायति)

सर्पपिंजरं राज्ञा प्रेरितं मीरा - करतलागतम्।
तस्य तर्पणान्ते हलाहले पीते, गरलं जातं मधुरामृतम्॥ ९९॥
शूलशय्या राज्ञा प्रेरिता, मीरा तत्र करोतु शयितम्।
प्रदोष आयाते कृते च शयिते, पुष्पशयनं मीरायाः प्रजातम्॥ १००॥
मीराश्रीप्रियः सदा सदयः करोति विघ्नं मीराया दूरीकृतम्।
भक्तिभावपूता गोविन्द-पदनता मीरा प्रियं करोतु सुप्रीतम्॥ १०१॥

देवरो मम विक्रमदेवो मह्यं सातिशयं क्रुद्धो यथेच्छं भाषतेऽपमानं च विधत्तेऽहर्निशम्। (पुरतो विलोक्य) अहो कष्टं पुनरपि स ननान्दा उदयदेवी च आयातौ।

(साटोपं प्रविशति विक्रमदेव उदयदेवी च)

उदयदेवी। (सोपहासम्) पश्य भ्रातः! सेयमस्माकं महामहीयसी परमभक्तिमती अग्रजजाया श्रील-श्रीमीरा-सुन्दरी तस्याश्चेतोहरं गिरिधरम् आद्रियते। अहो स्पर्धाशीला नारी! या वदति भगवान् तस्या द्वारि प्रेमभिक्षुकरूपेण तपश्चर्यां विधत्ते इति।

विक्रमदेवः। भगिनि ! सत्यमसहनीयमेतत्। तथापि किञ्चिद् वदामि। (मीरामुद्दिश्य) अयि नर्तकीप्रवरे परपुरुषसङ्गकारिणि ! धर्मस्य नाम्ना करोष्यनाचारं नित्यसंप्रसारितम् ? दूरीकुरु तव गदाधर-गोपाल-प्रेमिकम्। गरल-पूरितहृदया वदन-सरोजान् मा कुरु सङ्गीतामृतवर्षणम्। अद्य प्रभृति न केवलं तव धार्मिकसङ्गो जायते निषिद्धः, किन्तु गोपाल-पूजनमपि। विशेषतः सुकौशल-प्रेमोन्मादि नृत्यम्। शाक्त-परिवारे कथं विष्णूपासनं वा ?

श्रीमीरा। महाराज, देवर ! शान्तो भव। कथमकारणं मह्यं क्रुध्यसि ?

> अहेतु किं त्वं मयि कुप्यसीत्थं न कञ्चनाहं विदधामि दोषम्।
> स्वचेतसस्तोषकरीति कुर्वे क्रीडामिमामित्यवधारणीयम् ॥१०२॥

उदयदेवी। अकारणम् ? नितान्त-स्वार्थान्धायाः कुहक-जालविस्तार एषः।

विक्रमदेवः। किं भणसि ! शान्तो भविष्यामि ? अकारण-क्रोधः ? अयि पापाभरणे ! तदैव शममेष्यामि यदा कलुषाचारा त्वं मद्राज्याद् बहिः प्रस्थिता भविष्यसि। तव च गोपालस्त्वया सह बहिर्निर्गमिष्यति।

श्रीमीरा। किन्तु सर्वव्यापिनं तं कथं स्थानच्युतं करिष्यति महाराजः। पश्यतु महाराजः—

> स सर्वगो मे भगवानिहैव न केवलं राजति राजवर्य।
> सत्यं त्वयोक्तन्तु यदेष देवो मया सहैवाद्य गमिष्यतीति ॥१०३॥

उदयदेवी। अयि भगवति श्रीराधिके ! न स रसिकचूडामणिः सर्वव्यापी स केवलं प्राङ्गणव्यापी, यत्र त्वया नक्तंदिवं नरीनृत्यते।

विक्रमदेवः। अयि उपासिका-धुरंधरे ! दूरे यान्तु खलु तव सुदीर्घ-पाप-वचांसि। (सोपहासं) अहो रूपं तव कृष्णस्य, घनतम इव सूचीभेद्यम्। तदुपरि पुनः पीतधटी। अङ्गारस्य यथा हुताशनदाहः।

उदयदेवी। यः प्रतिगृहं गोपीजनं प्रेम याचते, वङ्किमनयनो वक्रकायोऽसौ।

श्रीमीरा। महाराज भगिनि च! शान्तौ भवतं, भगवन्निन्दा कदापि न करणीया।

विक्रमदेवः। निन्दां विहाय किं स्तुतिं करिष्यामि? नवनीत-कोमलं गोपीप्रियं कृष्णसुन्दरं कि पूजयिष्यामि? मूढ़े, अन्यतः पश्य शिवं शङ्करं हरं सर्वकलुषहरं तथा च तस्य शक्ति मातरं श्रीश्रीदुर्गाम्।

श्रीमीरा। महाराज! किमिति भेदेन पश्यति भवान्? देहभेदेऽपि मूलतस्तत्त्वमेकमेव। तथाहि

को भेदः सित-नीलयोरपि वपुर्भासा शिव-श्यामयोः
शम्भुः कार्यवशेन ताण्डवपटुः श्यामस्त्रिभङ्गोऽभवत्।
शक्तिश्चापि दशायुधा दशभुजा संगोप्य मूर्तिं निजां
सा वृन्दावनवासिनी परिणता राधा महाह्लादिनी ॥१०४॥

विक्रमदेवः। अहो महापण्डिता मां ध्रुवतत्त्वकथां शिक्षयति, अपर-विद्यायाः प्रयोजनराहित्यात्? शृणु पण्डिते राजादेशम्।

श्वः संवृत्ते राजकीयो गुरुस्ते
दद्यान्नूनं शक्तिमन्त्रेण दीक्षाम्।
कृष्णस्याग्रे नर्तनं ते निषिद्धं
लुप्येत् कामं साधुसङ्गप्रसङ्गः ॥१०५॥

श्रीमीरा। देवरवर! जगति श्रेष्ठा शक्तिः प्रेमशक्तिः, तस्यां दीक्षिताऽहं राजे, पुनर्दीक्षया मे किम्?

उदयदेवी। पुनर्दीक्षा तव सर्वजीवनार्जित-पापनिचयस्य दावानल-प्रज्वलनार्थम्।

विक्रमदेवः। सा दीक्षा त्वया स्वेच्छातः परिगृहीता, नास्माभिः स्वीक्रियते। न कदाचन सा दीक्षा लोकचक्षुर्गोचरीभूताऽसीत्, तस्मादग्राह्या। किन्तु कथम् अकाले राजमाताऽत्र समायाति?

(प्रविशति राजमाता)

राजमाता। तात! कथं पूज्यपादाम् अग्रजपत्नीं वृथा व्यथयसि?

विक्रमदेवः। साऽपि पूज्यपादा या भण्ड-देवतासकाशे कटितट-दत्त-हस्ता चटुल-चटुलं मृदु-झम्प-कम्पं नृत्यति?

राजमाता। मृतपुत्रस्य मम वधूं प्रति माऽद्य त्वमीदृशं निन्दावाक्यं समुच्चारय।

उदयदेवी। मातः, मृतपुत्रं प्रति स्नेहो यथा त्वया प्रकटनीयः तथा जीवित-पुत्रस्यापि मनोव्यथा त्वया हरणीया।

विक्रमदेवः। मातः! यद्यपि भूतपूर्वो राजा ममाग्रज आसीत्, तथापि तत्त्वार्थत उच्यते, नैषा कलङ्किनी कुले पुनरानेयासीत्। नैतत् कार्यं तस्य कस्मैचन रोचते।

राजमाता। कथम्? मह्यं तथाऽन्येभ्यो बहुभ्यो रोचते एव।

उदयदेवी। किन्तु मातः, महाराजः सत्यं भाषते यदस्याः कलङ्कगाथा सर्वेषां वदनेषु चरति॥

विक्रमदेवः। न केवलं चरति, उद्घोष्य सर्वैर्गीयते च (मीरामुद्दिश्य) अग्रज-जाये! यथा तथा वा भवतु—अग्रजे जीविते यथेच्छं जीवनं त्वया परिचालितं, मम राजत्वसमये तु न तत् सम्भवपरमास्ते।

श्रीमीरा। ततो विधातृनिर्दिष्टमार्गमनुसरिष्यामीति ध्रुवम्। गोपालो गिरिधरो मया न कदाचन परित्यजनीयः।

विक्रमदेवः। तदचिरादेव तथा कुरु, पापमुखं न भूयोऽपि द्रष्टव्यं मदन्तः-पुरवासिभिः।

राजमाता। अहो सतीनारीचक्षुर्जलं नाशयति वंशं कीर्तिसमुज्ज्वलमपि ध्रुवमेव। विक्रमदेव, अग्रजपत्नी त्वया कदापि न वहिष्करणीया।

विक्रमदेवः। राजाऽहं राज्यस्य, न भवती। पिशाचमुख्येषा न कदापि भवत्या स्तुत्या — न सा कदाचन राजपुरे स्थास्यति।

श्रीमीरा। प्रणामाञ्जलिं मातः पुत्रवध्वास्तवाधन्याया गृहाण। न कोऽपि मां वहिष्करोति, स्वेच्छात एव मीरा गृहाद्वहिर्गतवतीति मन्यमाना भवत वीतचिन्ता भवतु। सर्वे यूयं क्षमध्वं माम्।

राजमाता। वत्से! त्वमेवास्मान् क्षमस्व। यस्याः सहायो भगवान् स्वयं, तस्या अमङ्गलं न कदाचन भविष्यति। निरामया सुखिनी भव।

श्रीमीरा। मातः। धन्याऽस्मि।

विक्रमदेवः। पापाचाराणामीदृशी वै रीतिः। कुहकिनी मायाविनी मायाजालं विस्तार्य करोति दुर्बलजनानां चेतोहरणम्। अत एव स्वभाव-वुद्धि-प्रोज्वलो यथा ममाग्रजः तथा मम माताऽप्यस्याः पक्षीया जाता।

मायालोले घोर-कुहकिनि! अत्र स्थाने कदाचन पुनर्नागच्छ। त्वमागता चेत् कदाचित् मम प्रजापुञ्जम् उन्मादरोगग्रस्तं कुर्याः।

राजमाता। अहो! नेदृशी नारी कदाचनान्यस्यानिष्टकारिणी भवति। पुनः—सा स्वयमेव राज्यं त्यजति, किं पुनस्तस्यास्तिरस्करणेन ?

श्रीमीरा। मातः! न मम चित्ते आस्ते किमपि दुःखम्। गिरिधर-सकाशे प्रार्थये सर्वेषां कल्याणम्।

(गायति)

द्रवय हृदय कुलकृतभयमधिकुरु पुरु धैर्यम्।
सज्जनगणसङ्गमसृणमेधि विगतलज्जम्॥१०६॥
चित्ररचन-चीनवसनमङ्गाद्‌वतार्यम्।

स्थूलकठिनमर्धवसनमद्य वपुषि धार्यम् ॥१०७॥
मणिमण्डित-काञ्चनचित-भूषणमपसार्यम् ।
वनजकुसुम-माल्यमसममधिगलमधिकार्यम् ॥१०८॥
गलदविरल-नेत्रसलिल-गलितनिखिल-पङ्कम् ।
भगवन्मयमस्तु हृदयमस्तशमनशङ्कम् ॥१०९॥
भज श्रीकृष्णं वद श्रीकृष्णं कुरु श्रीकृष्णनाम रे ।
यो जनः श्रीकृष्णसेवी स हि मम प्राणो रे ॥११०॥

( सर्वे निष्क्रान्ताः )

अष्टमोऽङ्कः समाप्तः

— ❀ —

# नवमोऽङ्कः

श्रीवृन्दावने रूपगोस्वामि-प्रभोराश्रमस्थलम्

( प्रविशति मीरा )

श्रीमीरा । बहोः कालादभिलषामि श्रीरूपगोस्वामि-प्रभुणा सह साक्षात्कारम् । साम्प्रतं भाग्यात् समुचितः कालः समुपस्थितः ।

वहिश्चर-प्राणनिभो महाप्रभोः
सनातन-स्नेहरसोपलालितः ।
अशेष-पाण्डित्य-विमण्डिताशयः
स रूपगोस्वामि-वरः प्रसीदतु ॥१११॥

देव श्रीमन्महाप्रभो, शचीनन्दन, विष्णुप्रिया-प्राणधन ! मम हृद्देश-ममलं कुरु । श्रीलाद्वैतप्रभु-श्रीलहरिदासप्रभुद्वयस्य चक्षुर्जलधारामाध्यमेन नीलवर्णं परिहाय भोः श्रीजगदघपावन अखण्ड-श्रीहरे ! जगतः सर्वकलुष-मनाकुलमपरिशेषं परिमार्ष्टुं समागत आसीस्त्वं भूतले । त्वमसि देव मम प्राण-

प्रभोर्द्वितीयविग्रहः कलियुगपावनः। दुःखिन्यहं त्वां स्वचक्षुर्भ्यां दर्शं दर्शं नात्मानं पावयितुं समर्थासम्। तथापि त्वद्दर्शन-मनन-चिरधन्यं युगपुरुषं श्रीलरूपगोस्वामिप्रभुं द्रष्टुमुत्कण्ठते मे मनः। ततस्तद्दर्शनघटनया मां प्रीणाहि देव।

नमो नमः श्रीयशोदानन्दनाय श्रीशचीसुताय च, नमः श्रीसनातनानुजाय पुण्यश्रीरूपगोस्वामि-प्रभुमहोदयाय।

अये श्रीलप्रभुवरस्य भक्तः कश्चन इत आयाति।

(प्रविशति रूपगोस्वामिशिष्यः।)

रूपशिष्यः। नमो देवाय रूपाय शचीनन्दन-जीविने।
दक्षिणावर्त-भूखण्ड-धर्म-वैभवशालिने ॥११२॥
मन्त्रिपदयशोराशेस्तृणवद्दूरकारिणे।
प्रेमधर्मप्रचाराय वृन्दावन-निवासिने ॥११३॥

नमः श्रीवैष्णवधर्मविग्रहाय श्रीरूपगोस्वामिप्रभवे नमः।

(शनैः श्रीमीराम् अवलोकयन्)

मातः! का त्वम् अत्रभवती परिभ्रमण-कातरेव दृश्यसे? आश्रमपदमिदं मम गुरुदेवस्य श्रीकृष्णचैतन्यप्रभोः शिष्यवरस्य श्रीरूपगोस्वामि-प्रभोः।

श्रीमीरा। तदहं जानामि किल। तस्मात् प्रभुं द्रष्टुमहं समायाता दूराद्बहुदूरादेव श्रीमिवारप्रान्तात्।

रूपगोस्वामिशिष्यः। किन्तु मातः। गुरुदेवो मम कठोर-तपश्चर्याशीलो नारीजनवदनं नावलोकयति। तत् कथं भवत्या सह साक्षात्कारः सम्भवेत्?

श्रीमीरा। किन्तु आबाल्यादहं श्रीकृष्णमेव स्ववक्षसा धारयन्ती तस्य द्वितीय-विग्रह-श्रीकृष्णचैतन्य-वदनारविन्ददर्शन-सौभाग्य-वञ्चिता तस्य धन्योत्तरसाधकवरं द्रष्टुं समुत्कण्ठिताऽस्मि। एतदेव भवता भवद्गुरुदेवाय निवेदनीयम्।

रूपगोस्वामिशिष्यः। (सोत्कण्ठम्) किन्तु मातः। अधन्योऽपारगोऽहं किं करोमि? नैतत् सत्यमेव संभवति। नाहं कदाचन कयाचन नार्या सह गुरुदेवं भाषणप्रवृत्तं दृष्टवान्।

श्रीमीरा। तदार्य! भवतो गुरुदेवाय मया यत् कथनीयम् तदिदं पत्रारोपितं क्रियते—

श्रुतमाबाल्याद् गिरिधर एकौ
वृन्दावनपुरि पुरुषो धन्यः।
शिक्षादीक्षाचरण-विचारै
रपरे जीवा इह हि रमण्यः॥११४॥

तत् को भेदः कथयतु देवो
भवता साकं मम मीरायाः।
साक्षाद् भूत्वा मम कृपणाया
न भवान् विचलेद् व्रतदीक्षायाः॥११५॥

किञ्च विभो मे विलसति हृदये
श्रीलमहाप्रभुरपर-मुकुन्दः।
तेन च तेऽहं दर्शनमिच्छु-
र्येन भवेन्मे परमानन्दः॥११६॥

पुंस्त्रीविभेद-कलनामलिनाशयत्वं
सांसारिके कृतपदं वरमस्तु लोके।
वृन्दावनेशमखिलात्मतया विजानन्
युष्मादृशः कथमुपैतु विभेद-बुद्धिम्॥११७॥

पत्रमिदं भवता प्रभवे कृपया दीयताम्।

रूपगोस्वामिशिष्यः। (स्वगतम्) अहो! रमण्यपीयं स्वतपः-प्रभावेण दिग्दिगन्तं समुद्भासयतीव। तत् प्रभुपादो यथा तथा वा मनसि करोतु, मयाऽवश्यमेवास्याः पत्रारोपितोऽभिलासस्तत्सकाशे निवेदनीयः।

( श्रीमीरामुद्दिश्य ) मातः ! भवती क्षणमत्र तिष्ठतु । अचिरादेवाहं प्रत्यावर्तिष्ये ।

श्रीमीरा । तत्तथा करोतु भवान् ।

( रूपगोस्वामिशिष्यो वहिर्गतः )

अहो धन्यमिदमाश्रमपदं यत् श्रीवृन्दावनधाम्नः शीर्षभूतमिव प्रतीयते । सानन्दं नृत्यन्ति मुहुर्मयूराः चक्राकारर्वहशोभिनः । रोमन्थायन्ते पुण्यपयःस्राविण्यो गोमातरो वत्सलेहनव्याकुलाः । गोपालकाश्च श्रीकृष्णदर्शनलोलुपा इव व्यालोकयन्ति परितः । भक्तिप्रेमस्रोतोविपुला मानदीना यमुना नटीयते नितराम् ।

( प्रविशति गायन् कश्चन भक्तः )

नटनचटुलो नन्दनन्दनः
यशोदाञ्चल-विलोकन-चञ्चल-गोपालकुलाकुलदर्शनः ॥११८॥
कम्र-चरणधृत-नूपुरशिञ्जित-मुखरित-गोकुलवनभवनः
भक्तचेतोवासना-नित्यप्रपूरणा-व्याकुलहृदयगहनः
प्राणमनोविमोहनः । जयतु रे राधिकारमणः ॥११९॥

( निष्क्रान्तः )

( रूपशिष्यः पुनरागच्छति )

रूपशिष्यः । ( सुनम्रम् ) देवि, गुरुदेवो मम कथयति—भवत्या वचो वेदोक्तिवत् सर्वथा शिरोधार्यम् । यतो भगवान् श्रीकृष्णो भवत्या हृद्देशे चिरं वसति, ततो भवती अवश्यमेव गुरु-देवस्य दर्शनीया । परमुत्तरे वयसि विद्यमानो गुरुर्नात्रायातुं शक्नोति; ततो भवती सकृपमन्तरायातु ।

मीरा। वाढम्। धन्यास्मि॥

(गायति)

गिरिधर मीरा-प्राणधन।
द्रौपदीमान-पूर्णरक्षण-वस्त्रवर्धनप्रवण ॥१२०॥
प्रह्लाद-कारण-नृहरि-रूपायण भक्तकुलनित्य-शरण
गजराजमोक्षण ब्रह्म-विमोहन
मीरादासीधनातुलन ॥१२१॥

(उभौ निष्क्रान्तौ)

नवमोऽङ्कः समाप्तः॥

—: ❀ :—

## दशमोऽङ्कः

रूपगोस्वामी। अहो विचित्रं खलु जगत्। न तादृशो विधिर्यस्य नास्ते व्यतिक्रमः। महीयसी खलु सा जननी या वृन्दावने कृष्णं विना पुरुषान्तरं न पश्यति। गभीरतमं तत् प्रेम यदीदृशीं भावनां जनयति। श्रीकृष्णे यस्या गभीरा प्रीतिः, सा निश्चितं वन्दनीया।

(शिष्येण सह मीरा प्रविशति)

श्रीमीरा। प्रणमामि गोस्वामिवर्यम्।

रूपगोस्वामी। मातः! अनाविल-हरिप्रेमविलासिनी भव।

श्रीमीरा। (स्वगतम्) अहो! सत्यमेव महामहिष्ठो वरिष्ठ एष सन्न्यासी महाप्रभोः श्रीकृष्णचैतन्य-गौरसुन्दरस्य प्रतिभूरूपेण श्रीवृन्दावने राजते। स्नेहप्रीति-भक्तिसम्वलम् तस्य हृदयम्; नयनयुगले चापार-करुणाधारा शोभतेतराम्।

( रूपगोस्वामिनमुद्दिश्य ) देव ! भवद्दर्शनेन स्वयं श्रीगौरचन्द्र-दर्शनोल्लासिनी पिपासानिवृत्त्या धन्यास्मि जाता ।

**रूपगोस्वामी ।** मातः ! न कुरु हृदये दुःखपोषणम् ; गुणविशेषाज्ञानहेतोर्यदि निवारितासीः, तव चक्षुसी सूचयतः यत् स्वयं परम-पुरुषस्त्वया संदृष्ट इति । तस्य रूपवर्णनं त्वन्मुखतः श्रोतुमिच्छामि ।

**श्रीमीरा ।** कस्यापि मतेनासौ कृष्णः, पुनः कस्यचन मतेन गौरः; कस्यचन मतेनासौ लघुः, पुनः कस्यचन मतेन गुरुः । यथा तथा वा भवतु, तस्मा एव सर्वं मया समर्पितम् । मम प्रभुर्हि गिरिधरः, न केवलमिहैव जन्मनि, परं जन्मजन्मान्तरेष्वपि ।

**रूपगोस्वामी ।** अहो सुन्दरं त्वयोपलब्धं श्रीप्रभुरूपम् । मम शिष्यमुखादपि श्रीकृष्णप्रभोः स्वरूपं शृणु ।

**रूपगोस्वामिशिष्यः ।**

आजन्मातिनिरुपम-रूपधाम-श्याम-निरीक्षणतृप्तं नाक्षियुगलम् ।
लक्षलक्षयुगोचय-हृदयद्वय-विनिमयः, अतृप्तं तथापि मनः सदाकुलम् ।

**श्रीमीरा ।** देव गोस्वामिप्रभो ! ईदृश्येव रूप-सागरे भवतु मम निमज्जनम् । लेशतोऽपि वा ।

**रूपगोस्वामी ।** देवि ! त्वं पूर्णतया निमग्नाऽसि । प्रभुविरहस्य मम नियमो नु एषः, कदापि न शान्तिरवाप्यते, किन्तु तवाननविलोकनाज्जानामि किल तस्य गभीरमेलन-सुखधन्यासि त्वं मातः । अनुपमा तव देहस्य सात्त्विकी द्युतिः, अननुमेय-रसगुणा च त्वत्कण्ठोदीरिता भागवती स्तुतिः, अवस्थावैगुण्येऽपि राजतां तव हृदयेऽनाविला पूर्णा स्वस्तिमयी शान्तिः । धन्या त्वं मातः ।

**श्रीमीरा ।** प्रभुवाक्यं भवतु तत्त्वान्वितम् ! सत्यं खल्ववस्थावैगुण्यं, तथापि—पतिव्रताऽहं सत्यम् , मत्पतये सर्वजनसमक्षं मया कृतमना-

कुलनृत्यम् , न जानामि क्षुत्पीडां, न वा विश्रामं ; यामिन्यामपि निद्रा ममावसिता। प्रेमशरो मम हृदयं द्विधा विभज्य पार्श्वात् पार्श्वान्तरं गतः। मधुमक्षिकाभिर्यथा, तथाऽहं परिवेष्टिता आसं परिवारजनैः। गिरिधरप्रभो-र्दास्यहं; विश्वभर्तृ सनाशङ्का न मम भीतिकारणम् ॥

श्रीरूपगोस्वामी। स्वयं श्रीकृष्णस्य वचःक्रमेण स सर्वदाऽत्रैव आस्ते ध्रुवम्। चतुर्दिशं च तस्य विलसनम्। सुचिरमत्र निवसतोऽपि श्रीकृष्णरूप वर्णनेन नास्ते तृप्तं मम हृदयम्। तत्तवापि ध्रुवमेव। तथापि मच्छिष्य-मुखाच्छृणु श्रीकृष्ण-स्तुतिम्—

शिष्यः। (गायति)

भावय मनो मे गोकुलबालम् !
कायो मधुरो वर्णः सुनीलः दीर्घायतमक्षियुगलम् ॥१२२॥
अधरपल्लवे वंशी मोहिनी निर्गलयति सुधां निरर्गलम्।
वक्षोभूषणं तव वैजयन्तीमालम्
कटितट-किंकिणी रणति रिनिझिनी नूपुर-सिञ्जितमतुलम्।
नन्दनन्दनं सज्जनसुखाधानं नौमि भक्तवत्सल-गोपालम् ॥१२३॥

श्रीमीरा। सार्थकं नु ममागमनं भवदाश्रमे। अहमपि कदापि चिन्तयामि—ज्ञातं किल भवेन्नु मे प्रेम दुःख-नामान्तरम् , दुन्दुभिघोषण-मास्तां प्रेम गच्छतु दूरान्तरम्। ततः पुनरपि भीषणतरशब्दैः प्रोद्घोषयेयम्—

खादय काक तनूमखिलां कुरु तत्र स्वल्पव्यतिक्रमम्,
नोत्पाटय मम चक्षुर्द्वयं प्रियदर्शनं स्याच्चेत् प्रकाशम् ॥
नयनद्वयं गृहाण वा काक किन्तु नय तत् प्रियस्य मे सकाशम् ,
भोगारतये प्रदेहि प्रथमं नयनयुगलं ततो विधेहि भक्ष्यम्।

देव उपसंहारे धर्मविषये मह्यं सारोपदेशं प्रदेहि।

श्रीरूपगोस्वामी। सर्वं त्वया परिज्ञातम् , तथापि शृणु—अचिन्तनीयः खलु भागवतमहिमा। मानवबुद्धिः किन्तु स्वयं भगवतोऽपि अचिन्तनीयत्वं न

सहते। ततो द्वैतं, अद्वैतं, द्वैताद्वैतम् इत्यादिमतोपन्यासः। केषांचन पुनर्मात्राधिक्यं द्वैतेऽथवाऽद्वैते। श्रीकृष्णचैतन्यप्रभवे मे भगवतोऽचिन्तनीयं स्वरूपमरोचत। भवतु मातः सत्यधर्मस्य स्थानं हृदये, ननु मस्तिष्के, मस्तिष्कं निद्रापयति, हृदयं जनं तोरणोद्देशं नयति।

श्रीमीरा। अहो भगवतः श्रीकृष्णचैतन्य-सुन्दरप्रभोर्धर्मस्य महामाहात्म्यम्। देव, अचिन्त्यस्वरूपस्य परमपुरुषस्य साधनपद्धतिः पुनः कीदृशी भगवच्चैतन्य-महाप्रभुमतानुसारेण ?

श्रीरूपगोस्वामी। मातः ! सारगर्भा खलु प्रभोर्मे उपदेशवाणी, विशेषतो विषयेऽस्मिन्। भगवान् प्राह—"जीवे दया रुचिर्नाम्नि वैष्णवसेवनं तथा" इति। मातः, अत्र दया सेवापर्यायेति भवती जानाति किल।

एषु सर्वेषु विषयेषु तव अनुरागाधिक्यं सुप्रकटम् एव, तच्छ्रीश्रीभगवन्महाप्रभुसकाशे प्रार्थये अक्षय्या भवतु तव चित्तशान्तिः, निरन्तरो भवतु तव प्रिय-समागमः, निमेषमात्रमपि न त्वं श्रीकृष्णतो विच्छिन्ना भव।

मीरा। देव ! तवाशीर्वादेन धन्यास्मि। अमरलोको ममाश्रयोऽस्तु।
( निमेषाद् ध्यानस्था )

पथिश्रमक्लान्ता जिज्ञासे मार्गं कस्यापि न ज्ञातं मर्म।
सद्गुरुदत्तं पुण्यौषधं प्रादान् मे सुखं प्रतिरोम।
न हि वैद्यजनः सद्गुरुसमानो घोषयति सनातनधर्मः।
मीरायाः प्रभुर्गिरिधर-नागरोऽमरलोकेऽस्तु तस्याः शर्म।

श्रीरूपगोस्वामी। ( स्वगतम् ) अहो अस्या मुखे अमरलोक-कथां श्रुत्वा कथं हृदयं मम कम्पते ? भगवान् महाप्रभुर्मङ्गलमस्याः कोटिशो विदध्यात्।

महाप्रभुकायधरः श्रीकृष्णसुन्दरः
ददात्वस्यै क्षेममविरतम्।
अस्याः पथिपर्यटनं भवतु भो सुखकरं
द्वारकाधीशं यातु दयितम्।

( सर्वे निष्क्रान्ताः )

दशमोऽङ्कः समाप्तः

## एकादशोऽङ्कः

श्रीमीरा। अहो दिव्यलावण्यस्थलं श्रीद्वारकाधीशधाम। श्रूयते किल भारतवर्षस्य पश्चिमसीमान्तस्थ-रैवतकपर्वतस्तथा संरक्षितः प्रियतमेन मम, यत् काचन नार्यपि दण्डायमाना प्रबल-शत्रुवेगं प्रशमयितुं शक्नोतीति। कुत्र मथुराधीशः कंसः, कुत्र वा मगधराजो जरासन्धः, कुत्र वा शिशुपालः, क्व गताः पूतना-बकादय आसुरिकशक्तिसङ्घा अचलायमानाः? अहो स्थान-माहात्म्यात् प्रत्यासीदतीव हृदि मे प्राणनाथः! त्वरयतीव च मां गातुम्, तद् गायामि—

(गानम्)

विलसतु हृदि वनमाली।

कोमलदलविकच-कमल-नील-नयनपालिः ॥१२४॥

सस्मितमुख-दर्शनसुख-मोहित-वनितालिः।

अयि केशव दर्शय तव शैशव-रस-केलीः।

सुन्दरतम हृदये मम सञ्चर करताली ॥१२५॥

अयि देव!

तत् तव सविधे चिराय नय मामेकामतिचिर-विचरण-खिन्नाम्।

अहेतुकरुणा-वितरण-कुतुकिन्! न हि सन्त्यज मां सतत-विपन्नाम् ॥१२६॥

तव विपुलोरःप्रेमासारैः श्रान्तां क्लान्तां कृपयाधन्याम्।

भवदनुसरण-क्लान्तचरण-तलदूनां कर्मान्तर-परिशून्याम् ॥१२७॥

पातित-पथि-दृश एति विलयपथमहरपि सकलं सह यामिन्या।

न वृणे शान्तिं करोमि किमहं निःशेषित-तनुकान्तिरपुण्यया ॥१२८॥

अये! कोऽपि आयातीव?

(प्रविशति कश्चन ब्राह्मणः)

ब्राह्मणः। मातः! अहमस्मि कश्चन मेवाराधिवासी ब्राह्मणः।

मीरा। देव! मम प्रणामाञ्जलिं गृह्णातु भवान्।

ब्राह्मणः। मातः ! मेवार-राज्यं परित्यज्य कथं प्रजाः सर्वा अगाध-दुःखपारावारे निमज्जयसि ? मेवारराजोऽप्यद्य स्वकृतापराध-भारावनतोऽधोवदनो नितरामश्रु विसृजति।

शृणु मातः साम्प्रतिकीमवस्थां राज्ञः प्रजानाञ्च—

पुञ्जीभूतापराधानविनय-वहुलांस्तु व्यनुष्ठाय पूर्वं
पापेन स्वेन तप्तो विसृजति नितरामश्रु मेवार-राजः।
हा हेत्युच्चै रटन्ति प्रतिनियत-विधिष्वप्यनुत्साहमूढा-
स्त्वय्येकान्तानुरक्तास्तव मधुर-गुण-ग्रामसुग्धाः प्रजाश्च ॥१२९॥

भवतु वा महारजोऽपराद्धः, को दोषो मातः प्रजानाम् ? या विहाय देश-मातृका-स्वरूपिणी राजकन्या राजसहधर्मिणी राजलक्ष्मीस्त्वम् इतस्ततो भिक्षुकीव परिभ्रमसि ?

श्रीमीरा। आर्य ! एकदा पत्युर्मम निर्देशात् स्वराज्यं प्रतिगतवती परिवार-जनानां दुःखकारणमभवम्। पुनरपि स्वराज्यं मया गन्तव्यं न वा तत्र मम पतिः प्राणदेवता श्रीगिरिधारी एव प्रमाणम्। तत् तं पृच्छामि।

मेवार-ब्राह्मणः। मातस्तत्र यथाकर्तव्यं कुरु।

मीरा। गिरिधारिन् प्रियतम ! शुद्धां जानासि चेद् गृहाण माम्।

स्वीकुरु शुद्धामवैषि चेन्मां त्वदृते कञ्चन नाहं जाने।
दर्शय करुणाम् अधमामेनामेकः प्रभवसि शर्मविधाने ॥१३०॥
विद्धि विभो मामहनि निरन्नां स्वप्नविहीनां रजनीमाने।
अन्वहमनुपलमुत्सुकहृदयां नय मां दुर्गत-शरण निधाने।
गिरिधरनागर ! मरणोन्मुख्या न कुरु विलम्बं सङ्गमदाने ॥१३१॥

(ब्राह्मणमुद्दिश्य) न प्रत्यादेशो मया प्राण-प्रियाल्लब्धः। भवान् क्षणमभ्यधिकं तिष्ठतु। अहं पुनरपि देवतां मम प्रार्थये—

( मीरा पुनरपि गायति । )

आर्य महाजन ! जहिहि कदाचन
नहि मां कथमपि गुणलव-हीनाम् ।
प्रेमशिखावल ! मम चिर-चञ्चल
दुरितदलार्गल निर्गुण-दीनाम् ॥१३२॥
प्राणनिवन्धो भवसि मम त्वं
तवास्मि नितरां हृदयविलीना ।
जीवनभूषण कस्य सकाशं
यामि तवाहं करुणापीना ॥१३३॥

अये मम प्रभुरायात आयात एव । ( छायाकृष्णमुद्दिश्य ) प्राणप्रियतम ब्रूहि, अपि मया तत्रैव राजान्तःपुरे पुनर्गन्तव्यम् ? कथय, देव, कथय ।

( समौनं तिष्ठति क्षणम् )

( मधुरं विहस्य मेवार-ब्राह्मणमुद्दिश्य ) आर्य ! महाभाग ! बाल्यात् प्रभृति योऽयं मम प्राणपतिः श्रीकृष्णो गिरिधारि-नागर-प्रभुः, स कथयति— न मां त्यक्त्वा निमेषायापि इतः परं प्राणधारण-समर्थोऽसौ भविष्यति । ततः किं मया करणीयम् ?

शैशवकालात् प्राणपतिर्यः
सेवित आस्ते प्रभु-गिरिधारी ।
नहि स विना मां प्राणविधारण-
शक्तः क्षणमिति वदति विहारी ।
कथयत यूयं ज्ञानगरिष्ठाः
किमिह विदध्यां तदहं नारी ॥१३४॥

भवतु, मद्वाक्यात् सर्वाः प्रजा आश्वासनीया भवद्भिः ।

ब्राह्मणः । देवि ! सत्यमेव भृशं कष्टमापन्ना देशवासिनः । राजा च स्वयं भवत्याः प्रत्यावर्तनाय समुत्कण्ठितो वर्तते ।

श्रीमीरा। भूदेव! किमहं कर्तुमर्हामि? यमुनातटविहारि-श्रीनटवरेण सह मम नित्य-क्रीडाकालः समायातप्रायः। नाहं स्थानान्तरे यातुमस्मि समर्था।

(श्रीमीरा कृष्णसान्निध्यमनुभूयेव चकिता जाता। ब्राह्मण उच्चैः सर्वानाह्वयति)

(आयान्ति प्रधान-पुरोहितः अन्ये च केचन)

प्रधान-पुरोहितः। देवि! धरातले दिव्यालोकसंप्रसारिणि! नृपसुते! नृपसहधर्मिणि! भिक्षुश्रेष्ठे! अस्मासु दयस्व।

मातः दुःखमेतद् यन्मानवा जगति साक्षाच्छ्री-राधाया अपि गोलोकाद्भूतलावतरणं न स्वरूपेण बुध्यन्ते। जीवद्दशायां त्वादृशीनां न पूजा विधीयते यद्यपि तथापि ध्रुवमेवोत्तरकाले कोटिशो जनास्त्वन्नाम श्रावं श्रावं अश्रुनिषेकैर्धरणीतलं समार्द्रं करिष्यन्ति।

गोलोकादवनिं गताऽसि जननि त्वं राधिकारूपिणी-
त्येतद् भाग्यहता विचारविकला नेमे जना जानताम्।
उत्पत्स्यन्त इहापरे तव तनोः पातात् परं ये जना-
स्ते राधेति धिया सदैव भवतीं स्तोष्यन्ति गास्यन्ति च ॥१३५॥

मेवार-ब्राह्मणः। सत्यमेषा नु नियतिर्जनानामद्भुता किल। तथापि स्निग्धज्योत्स्नाप्रभा तप्तं जगत् शीतलं कृत्वा विश्वजनमनो हरति किञ्चिदपीति ध्रुवम्। सैव ज्योत्स्ना कालेन जगत् स्नपयति, विश्वं विप्लावयति, यद्दृष्ट्वा दिवाभ्रान्त्या विहगा अपि गभीर-यामिन्यां रुवन्ति।

किन्तु किमेतत्? लुप्यतीव माता द्वारकाधीश-वक्षः-पञ्जरे। मातः! मातः! आशीर्वादधारया जगत् संसिक्तं कुरु।

पुरोहितः। अहो धन्यं नु जगत्। संघटते आश्चर्यं ध्रुवम्। तथापि आशीर्वचसाऽस्मान् धन्यान् कुरु।

मीरा। आर्याः! नमस्यानां युष्माकं किमहमाशीर्वदामि? किञ्च—कालोऽयं मम प्रियेण सह मिलितुमित्यवसरोऽपि स्वल्प एव।

तथापि कथयामि—उच्यन्तां मद्वचसा भोजराजः, प्रकृतयो राजपरिजनाश्च

मन्युर्भवत्सु न मनागपि विद्यते मे
सा निष्ठुरा नियतिरेव, निराकृता यत् ।
श्रीद्वारकेश-कृपया भवतां भवित्री
नित्योन्नतिश्च निरुपद्रवता च राज्ये ॥१३६॥

पुरोहितः । मातर्नितराम् अनुगृहीताः स्मः । किमत्रोच्यते ? केवलमेतच्चिन्त्यते—

नित्यापकारकुटिलान् समुपेक्षमाणा
पारं गता त्वमसि देवि सहिष्णुतायाः ।
त्वां माधव-प्रणयिनीमपकुर्वतां तु
प्रत्युत्तरं किमिव वेधसि पृच्छति स्यात् ? ॥१३७॥

श्रीमीरा । आर्याः ! किमतः परं वः प्रियं कर्तुमर्हामि ?

पुरोहितः । इतोऽपि किं नु प्रियं स्यात् ? तथापीत्थमस्तु ।

( भरत-वाक्यम् )

धरणी तप्ता ज्योत्स्नास्नपिता स्निह्यतु मुग्धे जने ।
धराप्रोल्लासी मुरारिवंशीध्वनिर्लसतु गृहवने ॥

अपि च ( सङ्गीतम् )

जननी-नयन-रमण-दीपनं
लसतु गगने गगने ।
जननी-चरण-नूपुर-रणनं
नदतु पवने पवने ॥१३८॥
जननी-वदन-मोहन-हसनं
विकसतु च जने जने ।
जननी-जीवन-सुकमनधनं
विभातु भवने भवने ॥१३९॥

ॐ शान्तिः ॐ शान्तिः ॐ शान्तिः ॥

— ❀ —

15. Desabandhu-Desapriyam-on Desabandhu Chittaranjan and Desapriya Jatindra Mohan ( In the Press ).
16. Subhasa-Subhasam-on Netaji Subhas Chandra Bose.
17. Raksaka-Sri Goraksam—on Sri Goreksanath.

**Series No. 4. On Vaisnava Saints :**

18. Vimala-Yatindram on Vedantacarya Sri Ramanuja. Rs. 5/- ; Rexin Rs. 7/-
19. Mahaprabhu-Haridasam on Bhakta Yavan Haridasa, one of the foremost disciples of Sri Krishnacaitanya Mahaprabhu Rs 5/- ; Rexin Rs. 7/-
20. Dina-Dasa-Raghunatham. On Sri Raghunath Dasa Gosvamin Prabhu, one of the Six Vrindavana Gosvamins. Paper Cover Rs. 5/- ; Rexin Rs. 7/-.

**Series no. 5. Adeptations from Foreign Dramas**

21. Venice-Venijam-(from Shakespeare's Merchant of Venice).
22. Othello (from Shakespeare's "Othello").

**Pali Drama.**

**The only Pali Drama ever written.**

1. The Bimbasundari-Patibimbanam on Sri Yasobhara, Holy Consort of Prince. Siddhartha, depicting the entire life of Sri Sri Yasodhara.

**Other Works of Dr. J. B. Chaudhuri**

I. Contributions of Women to Sanskrit Literature in seven big volumes. 110.00
2. Contributions of Muslims to Sanskrit Learning :
Vol. I. Sangita-Malika by Md. Shah 7.00
Vol. II. Khan Khanan Abdul Rahim and Contemporary Sanskrit Learning. (Paper Ks. 5) Rexin. 8.00
Vol. III. Samudra Sangama by Md. Dara Sukoh (Paper Rs, 12) Rexin 20.00
3. (a) Muslim Patronage to Sanskrit Learning : (Belles-Letters) 2nd Ed. 10.00
(b) Muslim Patronage to Astrology and Astronomy (Jatakodaharana-Paddhati) 12,00
(c) Biography. Rudrkavi on his Muslim Prtrons. 5.00
4. Sanskrit Duta-Kavya Samgraha in seven volumes with two original Sanskrit commentaries by Dr. J. B. Chaudhuri on the Ghatakkar-

para Kavya and the Padankaduta called Sasvati aud Bhasvati respectively 20.00

5. Sanskrit Poets of Mediaeval India Based upon Anthologies. 5 Volumes) 35.00

6. (a) Meghaduta with commentaries of Bharat Malika and others 15.00
   (b) Meghaduta with commentaries of Sasvata and Sanatan Gosvamin 12.00

7. Vangiya Duta-Kavyetihasa (in Sanskrita). Rexin 8.00

8. Contributions of Bengal to Smriti Literature Vols. 1-3 5.00

9. Historical Kavyas in Sanskrit, 4 Vols. 30.00

10. Political Works, etc.
   A. Original Composition in Sanskrit
   (a) Sakti-Sadhanam. 3.00
   (b) Several commentaries on Sanskrit Texts. See Detailed Catalogue 3.00
   (c) Sanskrit and Bengali Songs of Dr. Jatindra Bimal Chaudhuri, with Bengali Translation bs Dr. Roma Chaudhuri, PrinciPal, Lady Brabourne College—in Seven Parts. 15.00

   B. Works on Hindu Dharma with Bengali Translation
   (a) Bhagavad Gita (Rexin) 5.00
   (b) Sri Sri Candi 3.00

11. Bengali Works
   (a) Pt. Iswar Chandra Vidyasagar 3.00
   (b) Gaudiya Vaisnavder Sanskrit Sahitye Dan 3.00
   (c) Prabandhavali in Eight Vols (Rs. 2 each) 24.00
   (d) Buddha-Yasodhara— (Paper Rs. 2.50) Rexin, 5.00
   (e) Janani Yasodhara 8.00

12. The Position of Women in the Vedic Ritual 15.00

13. Miscellaneous
   (a) Sanskrit and Prakrit Books in the India Office Library by Dr. J. B. Chaudhuri (as Joint Author) in four-big volumes 250.00
   Pracyavani, 12 Volumes ; each volume Rs. 12 144.00
   (c) Gaura-tattvam
   (d) Nripati-niti-garbhita-vritta

---

Available from

PRACYAVANI MANDIR 3, Feder

---